# ऐ

**ऐकशफम्** । क्ली । गर्दभीदुग्धे । सु. । See गर्दभीदुग्धम् । त्रि । एकखुरसम्बन्धीये ।

**ऐकाहिकः** । त्रि । एकदिवसस्पन्ने । एकदिनान्तरभवे । [See अन्वेद्युष्कः ।

**ऐकाहिकज्वरः** । पुं । एकदिनान्तरगतज्वरे ।

**ऐङ्गुदः** । पुं । इङ्गुदीवृक्षे । क्ली । इङ्गुदीफले । अम. । भैष. ।

**ऐणः(णेयः)** । त्रि । एणमृगचर्म्मादौ ।

**ऐणेयकम्** । क्ली । एलवालुके ।

**ऐन्दवी** । स्त्री । सोमराज्याम् । रा.नि.व.४ ।

**ऐन्द्रः** । पुं । देवसर्षपवृक्षे । क्ली । मूलविशेषे । बन आदा । गुणाः—कटुत्वं रुचिबलाग्निकरत्व । रा.नि.व.६ ।

**ऐन्द्रयवः** । पुं । इन्द्रयवे । मद.व.१ ।

**ऐन्द्रलुप्तिकः** । त्रि । इन्द्रलुप्तरोगविशिष्टे । टেকো । [राथालशशा । मद.व.१ ।

**ऐन्द्रवारुणी** । स्त्री । इन्द्रवारुणीलतायाम् ।

**ऐन्द्रिः** । पुं । काके । मे.रत्रिकं ।

**ऐन्द्री** । स्त्री । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा. नि.व.६ । वै.निघ.२भ.तालीशादिचूर्णे । इन्द्रवारुण्याः । राथालशशा । प.मु.रा.नि.व.३,च.सू.४अ. । गोरक्षकर्कट्यां । च.सू.४अ.प्रजास्थापने । भा.भवे. ।

**ऐन्द्रीफलम्** । क्ली । इन्द्रवारुणीफले । राथालशशाफल । च.द.उ.मा.चि. । "पक्वैन्द्रीफलमूत्रम् ।"

**ऐन्द्रीरसायनम्** । क्ली । रसायनविशेषे । अत्र ऐन्द्री (গোরক্ষচাকুলে), मत्स्याक्षी (তণ্ডুলীয়-मूल), ब्रह्मसुवर्चला (সুবর্চলা ভেদ), ब्रह्मपुष्पी (ভাণ্ডুনী), ऐन्द्र्यादिविवान्तानां प्रत्येकं यवत्रयं वैवर्णं स्वर्णं यवत्रयं विषस्य तिलं घृतस्य च पलं । च.चि.१अ. ।

**ऐभी** । स्त्री । हस्तिघोषालतायाम् । रा.नि.व.३ ।

**ऐरावतः** । पुं । लकुचवृक्षे । मान्दार । नागरङ्गे । নারাঙ্গা লেবু । मे.तचतुष्कं । रा.नि.व. ११, प.मु. । क्षुद्रद्वीपान्तरखर्ज्जूरे । क्ली । प्रवालाङ्करवीरे । रत्ना. । ऐरावतफले । तत्फलं अस्नरक्तपित्तकफघ्नश्च । सु.सू.४६अ. ।

**ऐरावतकः** । पुं । हस्तिशुण्ड्या । হাতিশুঁড়ে । च.चि.३अ. । नागरङ्गवृक्षे । वै.निघ. ।

**ऐरावतपदी** । स्त्री । काकजङ्घायाम् । मह्योत्योतिषमतीलतायाम् । বড় লতাফটকী ।

**ऐरावती** । स्त्री । वटपत्रपाषाणभेदरूपे । বড় পাথরকুচি । रा.नि.व.५ । नागरङ्गवृक्षे । भा. । गुणाः—"ऐरावती रसे पाके लघ्वीषा च सुमन्धिका । वातं कासं श्वासकृत्वं नाशयेदिति कीर्त्तिता ॥" वै.निघ. । [नि.व.५ ।

**ऐरिणम्** । क्ली । सैन्धवलवणे, पांशुलवणे । रा.

**ऐरेयम्** । क्ली । मद्ये । वै.निघ. । एलवालुके । अम. ।

**ऐर्वारुः** । पुं । कर्कटीविशेषे । বড় কাঁকুড় । मद.व.७। च.द.प्रदर.चि.।See एर्वारुः, कर्कटी ।

**ऐलवालुकम्** । एलवालुके । प्र.र. ।

**ऐलेय(क)म्** । क्ली । नलुकायाम् । एलवालुके । अम. । "ऐलेयविश्वधान्याकम् ।" सि.यो., च.द.र. पि.चि.वासाखण्डकुष्माण्डे ।

**ऐल्वालु** । क्ली । एलवालुके । मद.व.३ ।

**ऐशमूलम्** । क्ली । लाङ्गलीमूले । ঈশলাঙ্গুলিয়ার মূল । रस.र.बाल.चि. ।

**ऐशानः** । पुं । ईशानकोणभववायौ । स च कटुकः शीतलश्च । भा. ।

**ऐश्वर्य्यम्** । क्ली । श्वेतभुस्तूरके । वै.निघ. ।

**ऐषिका** । स्त्री । पाठायाम् । चित्रतायाम् । वै. निघ. । [मद्ये । मटा. ।

**ऐक्षवम्** । क्ली । इक्षुविकारे, गुड़ादौ । इक्षु-

**ऐक्षवी(सुरा)** । स्त्री । इक्षुरसकृतमद्ये । तद्गुणाः—शीतलं अतिमादकश्च । रा.नि.व.१५ ।

# ओ

**ओकः** । पुं, क्ली (कस्) । गृहे । आश्रये । अम. ।

**ओकणः** । पुं । केशकीटे । উকুণ । श.र. ।

**ओकणिः (णी)** । पुं, स्त्री । उकुणे । श.र. ।

**ओकोदनी** । स्त्री । यूके । উকুণ । श.र. ।

**ओक्षणी** । स्त्री । उकुणे । श.र. ।

**ओजः (स्)** । क्ली । बले । मै. सविर्श्च । तेजसि । रसादिसर्व्वधातुसारभागधातुविशेषे । गुणाः—सर्व्वशरीरस्थितत्वं स्निग्धत्वं शीतलत्वं स्थिरत्वं शुक्लवर्णत्वं कफात्मकत्वं शरीरबलपुष्टिकारित्वञ्च । हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् । ओजः शरीरे सङ्ख्यातं तन्नाशान्नाशमृच्छति । वै.निघ. । अष्टविन्दुप्रमाणं तदीषद्रक्तं सपीतकं । अग्निसोमात्मकत्वेन विकल्पं वर्णितञ्च तत् ॥ चर. । ओजश्च तेजोधातूनां शुक्रान्तानां परं स्मृतम् । हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ वा. । दीप्तौ । मे. ।

**ओजस्कर**: । त्रि । ओजोधातुवर्द्धके ।

**ओड़िका (ड़ी)** । स्त्री । नीवारे । উড়িধান্য । प.मु. । गुणाः—ओषधी रूक्षा कफवायुवर्द्धिकरी पित्तनाशिनी च । राज. । See नीवारः ।

**ओड्रः (कः)** । पुं । The China rose. (Hibiscus mutabilis.) जवाकुसुमवृक्षे । জবাফুলের গাছ । हिं जीड़हुल । मं जासविन्द । रा.नि.व.१० । गुणाः—संग्राही केशहितश्च । भा.पु.१भ.पुष्पव. । मलमूत्रसञ्जनरञ्जनश्च । राज. । कटुरसः इन्द्रलुप्तहरः विस्फोटजन्तुजनकः सूर्य्याराधनश्च । रा.नि.व.१० । माधा इमा. । [नि.व.१० ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा.

**ओड्रपर्य्यायः** । पुं । सूर्य्यकान्तपुष्पवृक्षे स्वनामख्याते । जवा । अम. । [फুল । प.मु. । See ओड्रः ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुमे । রক্তজবা

**ओड्रपुष्पा** । स्त्री । जवावृक्षे । वै.निघ. ।

**ओढ़ापलङ्कषा** । स्त्री । गोरक्षदुग्धाम् । वै. निघ. । [वनविड़ालि । वै.निघ. ।

**ओतुः** । पुं, स्त्री । विड़ाले । বিড়াল । अम. ।

**ओदः** । पुं । अन्ने ।

**ओदनः** । पुं । अद्रवे सिक्थे । स च भक्तादिभ्यो गुरुः । वा.टी.हेमा. । क्ली । भक्ते । प.मु. । अन्ने । रा.नि.व.२० । পিটুলি । सा.कौ.ज्व.वस्तिः ।

**ओदनपाकी** । पुं । नीलझिण्ट्याम् । च.चि. २अ.चन्द.तैले ।

**ओदना (निका) (नी)** । स्त्री । महासमङ्गायाम् । বেলেড়াবিশেষ । वाट्यालके । বেলেড়া । रा.नि.व.४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा.नि.व.४ । वाट्यालके । हिं खिरिहिटी । मद.व.१ ।

**ओलः (ल्लः)** । पुं । स्वनामख्यातकन्दशाके । ওল গাছ । र.मा., भा.पु.१भ. । गुणाः—अग्निकरः कफघ्नः रुचिकरः लघुः अर्शसि पथ्यः । ग्राम्यकन्देषु दोषल इति । राज. । See शूरणः । त्रि । आर्द्रे । मे. लङ्कि ।

**ओल(ल्ल)कन्दः** । पुं । शूरणे । ওল । र.मा. । वनौले । বুনো ওল । पानीयभक्तवट्याम् ।

**ओषः** । पुं । दाहे । प्लोषः प्रोषः इति पर्य्यायशब्दः । अम.भरतः ।

**ओषणः (णिः)** । पुं । कटुरसे । ঝাল । हे.च. । (णी) पुरातिशाके । পুরতিশাক । गुणः—कफवायुनाशित्वम् । राज. । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधिः** । स्त्री । फलपाकान्तशाली, कदलीधान्यादिके । हे.च. । द्रव्येषु । तासु पुनरोषधयः । ताश्च द्विविधाः स्थावराः जङ्गमाश्च । तासां स्थावराः चतुर्धा यथा—वनस्पतिः द्रुमः, वीरुत्, ओषधिश्चेति । तासु अपुष्पफलवान् वनस्पतिः, पुष्पफलवान् द्रुमः, प्रतानवती लता, फलपाकनिष्ठा च ओषधिः । जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेदजोद्भिज्जभेदेन । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । क्रिमिकीटप्रभृतयः स्वेदजाः । मण्डूकादयः उद्भिज्जा इति । सु.सू.१अ. ।

**ओषधिगणः** । पुं । रासायनिकौषधिविशेषे । ताः सोमसमवीर्य्या महौषधय इति ख्याताः ।

तासाञ्च सोमवल्लिकादीनां स्तुतयः शास्त्रे कथिताः। तत्राष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणुः अ-जा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति। एताश्चार्बुदगिर्य्यादिषु लभ्याः—“आसाञ्च याः क्षीरवत्यस्तासां क्षीरं कुड़वमितं सकृदेव उपयुञ्जीत। यास्तु अक्षीरा मूलवत्यः तासां प्रदेशिनी-प्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे। श्वेत-कापोती समूलपत्रा भक्षयितव्या। गोनस्यजगरीकृ-ष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षी-रेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभु-ञ्जीत। चक्रकायाः पयः सकृदेव। ब्रह्मसुवर्चलाः सप्तरात्रमुपभोक्तव्याः। भक्ष्यकल्पेन शेषाणां पञ्च-पलानि क्षीराढ़कक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहा-रौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सो-मवदानिर्गमादिति। अथासां पृथग्विज्ञानमुच्यते —मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा या विज्ञेयाजगरीबुधैः॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलिसम्मिता। सर्पाकारा लो-हितान्ता श्वेतकापोतिरुच्यते॥ द्विपर्णिनीं मूलभ-वामरुणां कृष्णमण्डलां। द्व्यरत्निमात्रां जानीयाद्गो-नसीं गोनसाकृतिं॥ सक्षीरां रोमशां मृद्वीं रसेने-क्षुसमोपमां। एवं रूपरसाञ्चापि कृष्णकापोतिमा-दिशेत्॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा। एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा॥ छत्राति-च्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे। जरामृत्युनि-वारिण्यौ श्वेतकापोतिसंस्थिते॥ कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः। कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी॥ करेणुः सुमहत्क्षीरा कन्देन गज-रूपिणी। हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी। अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा॥ श्वेतां विचि-त्रकुसुमां काकादन्याः समां क्षुपां। चक्रकामौषधिं विद्याज्जरामृत्युनिवारिणीम्॥ मूलिनी पञ्चभिः प-त्रैः सुरक्तां शककोमलैः। आदित्यपर्णिनी ज्ञेया स-दादित्यानुवर्त्तिनी॥ कनकाभा जलान्तेषु सर्व्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुव-र्च्चला॥ अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः। पु-र्णैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः। श्रावणी म-हती ज्ञेया कनकाभा पयस्विनी॥ श्रावणीं पाण्डु-राभासा महाश्रावणिलक्षणा। गोलोमी चाजलोमी च रोमशे कन्दसम्भवे॥ हंसपादीव विच्छिन्नैः प-त्रैर्मूलसमुद्भवैः। अथवा शङ्खपुष्पी च समाना सर्प-रूपतः॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा। एषा वेगवतीनाम जायते ह्यर्बुदत्रये॥…देवसुन्दे हृदवरे तथा सिन्धौ महानदे। दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्च्चला॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमवत्त्रये। दृश्यतेऽजगरी नित्यं गोनसी चाम्बु-दागमे॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमान-सम्। करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा॥ गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते॥ कौशि-कीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः। क्षितिप्र-देशो वल्मीकैराचितो योजनत्रयं॥ विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु। मलये नलसेतौ च वेगवत्यौषधी ध्रुवा॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्ष-येत्तामुपोषितः। सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम्॥” इत्यादि। गुणाः—युवानं सिंहवि-क्रान्तं कान्तं श्रुतनिगादिनं। कुर्य्युरेताः क्रमेणैव द्विसहस्रायुषं नरम्॥ अङ्गदी कुण्डली मौली दि-व्यस्रक्चन्दनाम्बरः। चरत्यमोघसङ्कल्पो नभस्य-म्बुददुर्गमे॥ व्रजन्ति पक्षिणो येन जलनम्बाश्च तो-यदाः। गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा॥ सु.चि.३०अ.। [वै.निघ.।

**ओषधी**। स्त्री। ओषधी। भरतः। लघुक्रचे।

**ओषधीपतिः**। पुं। कर्पूरे। हे.च.।

**ओषधीशः**। पुं। कर्पूरे। अम.। [ब.१८।

**ओष्ठः**। पुं। दन्तच्छदे। উপরঠোঁট। रा.नि.

**ओष्ठधरः**। पुं। ओष्ठे। ঠোঁট। [व्रण। मा.नि.।

**ओष्ठपाकः**। पुं। तन्नामकरोगविशेषे। ওষ্ঠ-

**ओष्ठपुष्पः**। पुं। बन्धुजीवपुष्पवृक्षे। বান্ধুলী গাছ। रा.नि.व.१०। See बन्धुजीवः।

**ओष्ठप्रान्तः**। पुं। सृक्कभागे। रत्ना.।

**ओष्ठफला (भा)**। स्त्री। बिम्बीलतायाम्। তেলাকুচা। मं गोडतोंडली। वै.निघ.।

**ओष्ठरञ्जनी**। स्त्री। ताम्बूले। পান। प.मु.।

**ओष्ठरोगः**। पुं। ओष्ठाश्रितरोगविशेषः; ओष्ठ-

अवादी। वातजपित्तजश्लैष्मिकसान्निपातिकरक्तजमांसजमेदोजाभिघातजभेदादष्टविधः। तत्र कर्कशत्वादिलक्षणा वातजाः, पिडकाचितत्वादिलक्षणा पित्तजाः, कण्डूमत्वादिलक्षणा कफजाः, कृष्णपीतश्वेतत्वादिसर्व्वलक्षणयुक्ताः सन्निपातजाः, खर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजाः, गुरुस्थूलत्वादिलक्षणा मांसजाः, सर्पिर्मण्डसवर्णत्वादिलक्षणा मेदोजाः,क्षतजातत्वादिलक्षणा अभिघातजा इति। भा.म ४भ.मुखरो.चि.। "आनूपपिशितक्षीरदधिमत्स्यातिसेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तराः॥ इति। मा.नि.। [प.मु.।

**ओष्ठा (ष्ठी)** । स्त्री। बिम्बायां। তেলাকুচা।

**ओष्ठाधरौ (रं)** । पुं, क्ली। ओष्ठद्वये।

**ओष्ठोपमफला (लिका)** । स्त्री। बिम्बिकायां। তেলাকুচা গাছ। हिं कुन्दुरु। भा.पू.१भ.।

—o<>o<>o—

# औ

**औड़(डु)म्बरम्** । क्ली। कुष्ठरोगविशेषे। मे.। तस्य लक्षणं—"रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरं। औदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्॥" मा.नि.। ताम्रे। जटा.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औड्रपुष्पम्** । क्ली। जवापुष्पे। हे.च.।

**औत्सुक्यम्** । क्ली। उत्कण्ठायाम्। हे.च.।

**औदनिकः** । पुं। सूपकारे। अम.। [पेटुके।

**औदरिकः** । त्रि। क्षुधिते। उदरमात्रपोषके।

**औदर्य्यम्** । क्ली। ताम्रे। मदनफले। उदुम्बरफले। [हे.च.।

**औदश्वित(त्क)म्** । क्ली। अर्द्धजलयुक्तघोले।

**औदुम्बरम्** । क्ली। ताम्रे। हारा.। महाकुष्ठरोगविशेषे। गुणाः—"पिलेन पक्वोदुम्बरफलाकृतिवर्णानि औदुम्बराणि।" सु.नि.५भ.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औदुम्बरच्छदः** । पुं। दन्तीछदे। वै.निघ.।

**औदुम्बरी** । स्त्री। कृमिभेदे।

**औद्दाल(क)म्** । क्ली। स्वर्णवर्णे वल्मीककारिकीटकृतमधुनि। উইমধু। रा.नि.व.१४। गुणाः—कषायम् उष्णं कटु कुष्ठविषनाशि च। राज.। राजनिघण्टुतु भूमेः उद्दलनात् औद्दालकाभिधाः कपिलकीटाः तैः वल्मीकसमीपे सञ्चितं मधु। "औद्दालाः कपिलाः कीटा भूमेरुद्दलनात् स्मृताः। वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्य्यते। कुष्ठादिदोषघ्नं सर्व्वसिद्धिदञ्चेति।" रा.नि.व.१४। "प्रायोवल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्व्वन्ति कपिलं स्वल्पं तत्स्यादौद्दालकं मधु॥" रूक्षं स्वर्य्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च। भा.पू.२भ.मधुव.।

**औद्दालकशर्करा** । स्त्री। औद्दालमधुकृतशर्करायां। सा गुणैरौद्दालमधुसदृशी। रा.नि.व.१४।

**औद्भिज्जम्** । क्ली। पांशुलवणे। সোরা। रा.नि.व.६। शाम्भरिलवणे। [राज.।

**औद्भिदम्** । क्ली। औद्भिदलवणे। সোরা।

**औद्भिदजलम्** । क्ली। उद्भिदो जाते जले। प्रस्रवसलिले। तस्य गुणाः—मधुरं पित्तशमनं अविदाहि च। राज.। लघु। रा.नि.व.१४। "विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु॥" भा.पू.१भ.वारिव.। वर्षासु औद्भिदं पथ्यम्। मद.।

**औद्भिदद्रव्यम्** । क्ली। उद्भिद्य पृथिवीं जायते इत्युद्भिद्। तच्च वनस्पतिलतावानस्पत्यौषधात्मकम्। See च.सू.१अ.वनस्पत्यादिः।

**औद्भिदलवणम्** । क्ली। पांशुलवणापरनामधेयलवणे,यद्भूगर्भतः स्वयमुत्पद्यते। সোরা। सि.यो.यक्ष्म.चि.चित्रगुड़िकायां। च.द.महाषट्पलघृते। गुणाः—क्षारयुक्तं गुरु कटु स्निग्धं शीतं वातघ्नञ्च। भा.पू.१भ.ह.व.। रक्तकं सूक्ष्मं लघु वातानुलोमनञ्च। मद.व.२। तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाहशूलघ्नञ्च। राज.।

**औधस्यम्** । क्ली। पयसुग्धे।

**औनीतम्** । क्ली। चक्षुरोगविशेषे। गुरुभोज-

माभिचन्द्रियाश्रयस्थलाशौसेवावर्ज्जनात् शुक्रं स्वस्थानच्युतं मेहने प्रतिहन्यते,तेन मूत्रकृच्छ्रं भवेत्। ततः शोणितं कुपितं मेहने शूलं जनयति। मेहनस्य छिन्नं पक्वं कण्डूमत्पिडकायुक्तं मक्षिकाश्रितं भवति, स्रवणश्च न प्रविशति। च.द.५१अ.।

**औन्दूवरम्** । क्ली । ताम्रे । भा.म.१भ.।

**औपवस्तम्** । क्ली । उपवासे । लङ्घने । हे.च.।

**औपसर्गिकः** । पुं । सन्निपातादिरोगविशेषे । तस्य लक्षणं —"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदशैत्यादिभिर्जुष्टस्तदा भवति मानवः॥ प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात्। औपसर्गिक एवाप्यः सन्निपात उदाहृतः॥" वैद्यशास्त्रं।

**औपस्थ्यम्** । क्ली । उपस्थेन्द्रियसुखे ।

**औपीनम्** । क्ली । उष्यसेवे । रा.नि.व.२ ।

**औमीनम्** । क्ली। अतसीक्षेत्रे। मशिनार क्षेत।

**औरभ्रः (कः)** । पुं । कम्बलमृगे । मेषे । हे.च.। क्ली । मेषमांसे । भाड़ार मांस । मं मेंढ़ीकरमांस । गुणाः—मधुरं शीतलं गुरु विष्टम्भि बृंहणञ्च । मेषसमूहे । ऊर्णावस्त्रे । रा.नि.व.१७ ।

**औरिषम्** । क्ली । मृत्तिकालवणे । यवक्षारे । सोरा । वै.निघ.।

**औरुवुकम्** । क्ली । एरण्डतैले । च.द.।

**और्व्वम्** । क्ली । मृत्तिकालवणे । यवक्षारे । पांशुलवणे । रा.नि.व.६ ।

**औलम्** । क्ली । श्वेतशूरणे । वै.निघ.।

**औलूकम्** । क्ली । उलूकसमूहे । जटा.।

**औशीरम्** । क्ली, पुं । बालके । वाला । चामरदण्डे । आसने । त्रि । उशीरजे । मे.रत्निकं ।

**औषणम्** । क्ली । कटुरसे ।

**औषधम्** । क्ली । गुण्ठाम् । र.सा.सं.औषधमारणगणे । रोगघ्नद्रव्ये । ঔষধ । "वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम्" । अत्रि.। औषधं पञ्चविधम् । यथा—रसचूर्णकषायावलेहकल्काः । "तत्र पञ्चविधं प्रोक्तं रससंयोगविशेषतः । रसचूर्णं कषायश्चावलेहः कल्क इत्यपि॥" तत्र पुनः द्विविधं शोधनशमनलक्षणं । तयोः शोधनरूपं वस्तिविरेकवमनम् । कुपितदोषान् बहिर्निःसार्य रोगोपशमनं करोति । शमनरूपं तैलघृतमधुरूपं स्वस्थानस्थितानामेव साम्यहेतुः । भा.टी. अस्तु । तत्र वातस्य वस्तिः (गुदप्रविधेयस्नेहादि) । पित्तस्य विरेकः (मुखपीतं गुदमार्गेणान्तःस्थितस्य निःसारणं) । कफस्य वमनं (मुखेन पीतं तेनैव दोषस्य निःसारणम्) । शमनं—वातस्य तैलं, पित्तस्य घृतं, कफस्य च मधु । विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि। वल्मीककश्मशानादिजानि न ग्राह्याणि । औषधोद्धरणमन्त्रोऽप्यस्ति स्थानाभावान्नोक्तः । औषधद्रव्याङ्गग्रहणं यथा—खदिरादीनां सारः,निम्बादीनां त्वक्, दाड़िमादीनां फलं,पटोलादेश्च छदः ग्राह्यः। सारः स्यात् खदिरादीनामित्यादि । शार्ङ्गधरमते न्यग्रोधादेः त्वक् वीजकादेः सारः तालीशादेः पत्रं त्रिफलादेश्च फलं ग्राह्यमिति । काष्ठगर्भमहामूलानां वल्कलं क्षुद्रमूलानां सर्व्वशो ग्राह्यमिति । अतिस्थूलजटायास्त्वचः तथा सूक्ष्ममूलानि सर्व्वशो ग्राह्याणि । यत्र द्रव्याङ्गावयवो यादृशो निर्दिष्टः, तत्र तादृश एव ग्राह्यः । यथामृतादिकषाये अमृतादीनां पत्रमेव ग्राह्यम् । अङ्गसामान्योक्तौ मूलवल्कलम्, "अङ्गेऽप्यनुक्ते विहितन्तु मूल"मिति वचनात् । विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि स्वरसौषधं सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते । शिशिरे मूलं, ग्रीष्मे पत्रं, वर्षावसन्तयोः त्वक्कन्दौ, शरदि क्षीरं यथर्त्तुपुष्पं फलञ्च हेमन्ते सारञ्च ग्राह्यम् । सामान्योक्तौ—मृत्पात्रं, उत्पले नीलोत्पलं, शकृद्रसे गोमयरसः, चन्दने रक्तचन्दनं, सर्षपे सितार्थः, लवणे सैन्धवं मूत्रे गोमूत्रं, घृतदुग्धेषु गव्यमेव, चतुष्पदे स्त्रीः, पक्षिणि पुमान्, वयस्थजाङ्गलानां चर्म्मादि हित्वा ग्राह्यम् । मांसे कथिते छागं क्लीवञ्च प्रतीयात् । अनुक्ते ग्रहणं यथा—कालेऽनुक्ते प्रभातं, अङ्गेऽनुक्ते जटा, भागेऽनुक्ते साम्यं, द्रवेऽनुक्ते जलं । प.प्र.१ख.। चूर्णलेहासवकार्य्ये तु श्वेतचन्दनं क्वाथप्रलेपे रक्तचन्दनं ग्राह्यम् । भक्षणीयौषधविधाने—अजमोदोक्तौ यमानी, वाह्यप्रलेपे तु वचा ग्राह्या । भा.।

**औषधकालः** । पुं । औषधसेवनस्य समयः । स च दशविधः—"निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति । तत्र निर्भक्तं केवलमौषधमुपयुज्यते । प्राग्भक्तं यत्तु प्राग्भक्तस्योपयुज्यते । अधोभक्तं यद्भक्तान्ते

पीयते। मध्येभक्तं यन्मध्ये भक्तस्य पीयते। अन्तराभक्तं नाम यदन्तरा पीयते पूर्व्वापरयोर्भक्तयोः। सभक्तं औषधेषु यत्साध्यते भक्तम्। सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते। मुहुर्मुहुर्ग्रासं सभक्तम भक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते। ग्रासान्तरं ग्रस्तिकृग्रासमिश्रम्।" तत्र निर्भक्तगुणाः—"वीर्य्याधिकं भवति भेषजमन्नहीन"मित्यादि। प्राग्भक्तस्य यथा—"शीघ्रं विपाकमुपयाति बलं न हिंस्यादित्यादि।" अधोभक्तस्य यथा—"पीतं यदन्नमुपभुज्य तदूर्द्ध्वकाये हन्यादगदान् बहुविधांश्च बलं ददाति।" मध्येभक्तस्य यथा—"मध्ये तु पीतमुपहन्त्यविसारिभावाद् ये मध्यदेहमभिभूय भवन्ति रोगाः।" अन्तराभक्तस्य यथा—"हृद्यं मनोबलकरन्त्वतिदीपनीयम्।" सभक्तस्य यथा—"पथ्यं सभक्तमबलाबलयोर्हि नित्यमित्यादि।" सु.उ.६४अ.।

**औषधालयः** । पुं। औषधगृहे। ঔষধের ঘর।

**औषधिः (धी)** । स्त्री। गुडूच्यां। रास्नायां। दूर्व्वायाम्। श्वेतदूर्व्वायाम्। हरीतक्याम्। मद्ये। औषधे। रत्ना.। फलपाकान्तद्व्याद्रौ। हे.च.।

**औषधिगन्धः** । पुं। आघ्राणेन ज्वरादिकरौषधीनां गन्धे। च.द.ज्वरातिसार-चि.।

**औषधिप्रतिनिधिः** । पुं। यदौषधं न लभ्यते तस्य स्थाने तत्समगुणद्रव्यान्तरग्रहणे। यथा—मेदाभावे अश्वगन्धा महामेदे च शारिवा। जीवकर्षभकाभावे गुडूची वंशलोचना इत्यादि। चित्रकाभावे दन्ती अपामार्गक्षारो वा, धन्वयासाभावे दुरालभा, तगराभावे कुष्ठं, मूर्व्वाभावे जिङ्गिनीत्वक्, अहिंस्रालक्ष्मणाभावे मानकमयूरपुच्छग्रहणं, वकुलाभावे कह्लारोत्पलपद्मग्रहणम्। नीलोत्पलाभावे कुमुदं, जातीपुष्पाभावे लवङ्गं, अर्कादिक्षीराभावे तत्पत्ररसः, पुष्करमूलाभावे कुष्ठं, लाङ्गलकीग्रन्थिपर्णाभावे कुष्ठञ्च ग्राह्यं। भा.पू.१भ.। चविकाभावे गजपिप्पली, पिप्पलीमूलम्, सोमराज्याभावे चक्रमर्द्दफलम्, दार्व्व्यभावे हरिद्रा, रसाञ्जनस्याभावे दार्व्वीक्वाथः, सौराष्ट्रमृदभावे फटिकारी, तालीशाभावे स्वर्णताली, भार्ग्यभावे तालीशं कण्टकारीमूलं वा, वचकस्याभावे पांशुलवणं, यष्टीमध्वभावे धातकीपुष्पम्, अम्लवेतसाभावे चुक्रं। द्राक्षाभावे गाम्भारीफलम्, तदभावे पीतशालपुष्पं, मधाभावे लवङ्गम्, कस्तूर्य्यभावे काकोली, तदभावे जातीपुष्पम्. कर्पूराभावे ग्रन्थिपर्णी (गाँठिया-ला) सुगन्धिमुस्तकं वा, कुङ्कुमाभावे कुसुम्भं, श्रीखण्डचन्दनाभावे कर्पूरम्, तदुभयाभावे रक्तचन्दनं ग्राह्यं। मध्वभावे जीर्णगुडः, पुरातनाभावे नवचतुष्टयग्रस्तः गुडः, क्षौराभावे मौद्गो मासूरश्च रसः, शर्कराभावे खण्डं, शाल्यभावे षष्टिकं, दाड़िमाभावे वृक्षाम्लं, सौराष्ट्रमृदभावे पङ्कपर्पटी, लौहाभावे तन्मलं, चव्यगजपिप्पल्यभावे पिप्पलीमूलं, मुक्तिकाभावे तालमुस्तं ग्राह्यम्। माजुफलमिति केचित्। प.प्र.१ख.।

**औषधिवीर्य्यम्** । क्ली। शीतोष्णादिरूपे। तच्च शीतमुष्णं रूक्षं स्निग्धं तीक्ष्णं मृदु पिच्छिलं तीव्रं विशदञ्चेति। तदुक्तं "वीर्य्यं द्विविधमुष्णं शीतञ्चाग्निसौमीयत्वाज्जगतः। केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्व्वन्तीति।" सु.सू.४०अ.।

**औषधीपञ्चामृतम्** । क्ली। गुडूचीगोक्षुरमुषलीमुण्डीशतावरीषु।

**औषर(क)म्** । क्ली। अयस्कान्तभेदे। पांशुलवणे। स्वर्जिकालवणे। খারী নুন্। सैन्धवलवणे। ऊषरदेशजलवणे। गुणाः—क्षारं तिक्तं वातकफघ्नं विदाहि पित्तकृत् ग्राहि मूत्रशोषकञ्च। रा.नि.व.६। क्षारे। मद.व.२।

**औष्ट्रकम्** । क्ली। उष्ट्रसमूहे।

**औष्ट्रतक्रम्** । क्ली। उष्ट्रीदुग्धजातघोले। गुणाः—"औष्ट्रं तक्रन्तु विरसं गुरुक्षयञ्च दोषलम्। पीनसश्वासकासेषु प्रशस्तमुक्तम्।" वै.निघ.।

**औष्ट्रनवनीतम्** । क्ली। उष्ट्रीदुग्धजातनवनीते। गुणाः—लघुपाकं शीतलं व्रणक्रमिकफरक्तदोषघ्नं वातघ्नं विषघ्नञ्च। रा.नि.व.१५।

**औष्ट्रमूत्रम्** । क्ली। उष्ट्रमूत्रे। गुणाः—उन्मादशोफार्शःक्रमिशूलोदरघ्नञ्च। मद.व.८।

**औष्ट्रक्षीरम्** । क्ली। उष्ट्रीदुग्धे। See उष्ट्री।

**औष्ट्रीघृतम्** । क्ली। उष्ट्रीनवनीतजघृते। गुणाः—मधुरं पाके कटु शीतलं क्रमिकुष्ठहरं वातकफगुल्मोदरघ्नञ्च। रा.नि.व.१५।

**औष्णम्** । क्ली। उष्णतायाम्।

# क

**कम्** । क्ली । जले । रा.नि.व.१४ । सुखे । मे. । केशे । धर. । [पानपचे । च.टी. ।

**कंसः** । पुं, क्ली । कंसमाचिके (महाद्रावके) ।

**कंसम्** । क्ली, पुं । ताम्रवङ्गयोरुपधातौ, कांस्यधातौ । काँसा । प.मु. । आढकपरिमाणे (८श.) । भा. । तैजसपात्रमात्रे । त्रिका. । [हे.च. ।

**कंसकम्** । क्ली । पुष्पकाशीशे । इदं श्वेतवर्णम् ।

**कंसहरीतकी** । स्त्री । शोथाधिकारे । हरीतकी १०० शतं, दशमूलं प्रत्येकं ६प. शती. १॥० मात्रा मिलितं ६४प. वारि ५१२ प. (६४श.) शे. १२८ प. (१६ श.) पुरातनगुड़: १०० प. । पक्वा लेहवत्कृते, शुण्ठीचूर्णं ८ तो. मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षार: ८ तो. गुड़त्वक् २ तो. तेजपत्रं २ तो. एलाचूर्णञ्च २ तो. प्रक्षेपो देय: । मधु २ श. वा १६ प. । मतान्तरे क्वाथ: ८ श. । पाठ: —"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुड़ाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च । प्रस्थार्द्धमात्रं मधुन: सुशीते किञ्चिच्च चूर्णादपि यावशूकात्, एकाभया प्राश्य ततश्च लेहात् शुक्तिं निहन्ति श्वयथुं प्रवृद्ध"-मित्यादि । शा.कौ. ।

**कंसास्थि** । क्ली । कांस्यधातौ । काँसा । "कंसे तु कांस्यं कंसास्थि" । त्रिका. । [च. ।

**कंसोद्भवा** । स्त्री । सौराष्ट्रमृत्तिकायाम् । हे.

**ककन्द:** । पुं । स्वर्णे । उणा. ।

**ककरीमुख:** । पुं । केशे । रा.नि.व.१८ ।

**ककारपूर्व्वद्रव्यम्** । क्ली । ककारपूर्व्वकद्रव्येषु । तानि यथा—कटुक:, कालशाकं, कुष्माण्डं, कर्कटी, कर्कन्धु:, कर्कोटक:, कलिङ्ग:, करमर्द्द:, करीर:, कतक:, कशेरु:, काञ्जिकञ्चेति रक्तपित्ते वर्ज्यम् । भा.म.र.पि.चि. ।

**ककुङ्गिनी** । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । भा.म.१भ. । [राज. ।

**ककुण्डल:** (ला) । पुं, स्त्री । चातकपक्षिणि ।

**ककुण(न)क:** । पुं, क्ली । बालरोगविशेषे । See ककूणक: ।

**ककुत्** (द:) । स्त्री, पुं, क्ली । वृषाङ्के । षाँड़ेर झूँटि । प्राधान्ये । अम. । ध्वजे । मे । दर्व्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्प: ।

**ककुद्मती** । स्त्री । कटौ । पाछा, नितम्ब । अम. । त्रि । ककुद्विशिष्टे । [हवे । हे.च. ।

**ककुद्मान्** । पुं । ऋषभकवृषे । रा.नि.व.५ ।

**ककुन्दरम्** । क्ली । नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठसन्धिमर्म्मद्वये । मेरुदण्डोभयत: पार्श्वजघनयोर्ब्बहिर्भागे ईषदधस्तस्य स्थानम् । तत्र स्पर्शाज्ञानमध:काये चेष्टोपघातश्च । सु.शा.६अ. । ककुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ । रा.नि.व.१८ । पुं । वृक्षविशेषे । गुणा:—"ककुन्दर: कटुस्तिक्त: ज्वरघ्नशोथकृन्मत: । रक्तकफदाहानां तृषायाश्च विनाशन: ॥" अस्यार्द्रमूलञ्च मुखे धारितं मुखदोषनुत् । वै.निघ. । [भषिकां ।

**ककुप्** । स्त्री । चम्पकमालायां । प्रवेशाम् । मे.

**ककुभ:** । पुं । अर्ज्जुनवृक्षे । प.मु. । हवे ।

**ककुभत्वक्** । स्त्री । अर्ज्जुनवृक्षवल्कले । च.द. । सि.यो.यक्ष्म.चि.ककुभादौ ।

**ककुभशाखा** । स्त्री । भार्य्याम् । रत्ना. । [च. ।

**ककुभादनी** । स्त्री । नलीनामकगन्धद्रव्ये । श.

**ककूणक:** । पुं, क्ली । शिशोर्नेत्रवर्त्मजरोगे । कठो । हिं कोयुवाइ । लक्षणं यथा—"ककूणक: क्षीरदोषाक्षिशूनामक्षिवर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहु: । शिशु: कुर्य्याल्ललाटाक्षिकूटनासावघर्षणं । शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम: ॥ मा.बालरो.नि. । ककूणकं क्षीरदोषाक्षिशूनामक्षिवर्त्मनि । जायते सरुजं नेत्रं कण्डूरञ्च स्रवेन्मुहु:… ॥ भा.म.४भ. ।

**ककूल(क)म्** । क्ली, पुं । गोशकृदादिपूर्ण्णसन्तापे । वा.टी.भरत: । अपूपपचनार्थं मृण्मयपात्रे । "ककूलं शकृभि: कौर्षे स्वर्गे ना तु तुषानल: । तेन च मृण्मयमुत्तानमपूपपचनपात्रं लक्ष्यते" । वा.टी. हेमा. ।

**ककेरुक:** । पुं । क्रिमिभेदे । See क्रिमि: ।

वा । नन्दीवृक्षे । परिखाप्रान्ते । কাচা । इ.च. । जलप्रान्ते । अम. ।

**कच्छकाण्डनः** । पुं । अश्वत्थभेदे । গয়া অশ্বথ । [কাছা, কোঁচা । श्र.र. ।

**कच्छ(च्छा,च्छो)टिका** । स्त्री । कच्छे ।

**कच्छपः** । पुं । स्वनामख्यातजन्तुविशेषे । কাছিম, শুন্দি, কাঠা, বারকোল । मं कामव । एतन्मांसगुणाः — वातहरं शुक्रदं चक्षुष्यं बल्यं मेधास्मृतिकरं पथ्यं शोषघ्नञ्च । तच्चर्म पित्तहरं । तत्पादः कफघ्नः । तदण्डं स्वादु वाजीकरञ्च । रा. नि.व.१८ । "कच्छपी मधुरः स्वादुः शुक्रवृद्धिकरी मतः । वातश्लेष्मप्रजननी वृंहणी रुच एव च ।" अत्रि.२२अ. । नन्दीवृक्षे । তুঁদ গাছ । रा.नि.व.१२ । मदिरायन्त्रे । श्र.च. । श्लेष्मजन्यतालुरोगविशेषे । तत्र कूर्म्मवदुत्सन्नोऽवेदनः नातिशीघ्रोऽतिशीघ्रं जायते । "कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मारोगो ज्ञेयः कच्छपः श्लेष्मलः स्यात् ।" भा. म.ख.४भ.मुखरो.चि. ।

**कच्छपयन्त्रम्** । क्ली । औषधपाकयन्त्रविशेषे। तल्लक्षणं—"जलपूर्णपात्रमध्ये दत्त्वा खर्परन्तु विस्तीर्णं । तदुपरि रसविड्गिः स्थाप्यः सूतो मृदः कच्छ्राम् ॥ लघुलौहकोटरिकया कृतपटुसन्धिलेपमाच्छाद्य देया तदुपरि सिकता चैकाङ्गुलिपरिमाणापि ॥ तत्खर्परं पूर्य्यं चाङ्गारकवनोपलैर्नोपचितम् ॥" अत्रि. । "जलपूर्णपात्रमध्ये कृत्वा पुटकर्परं सुविस्तीर्णं । तदुपरि विड्मध्यगतः सूतः स्थाप्यः कोष्ठ्यां ॥ लघुलौहकटोरिकया कृतपटुसन्धिमाच्छाद्य । पूर्णान्तरपुटखर्परमध्ये अङ्गारैः खदिरकाष्ठभवैः ॥ स्वेदयती मर्द्दनतः कच्छपयन्त्रस्थितो रसो जयति ।" इदमेव कच्छपयन्त्रं आकण्ठभूनिवेशितं जलपत्तनिकासुखस्थितशरावे दत्त्वा रसमन्येन प्रकोर्णवदनेन सर्व्वमाच्छाद्य उपरि सिकताभिरङ्गुलिमानेनाच्छाद्य भूमिभागे कुक्कुटपुटादधः कच्छपयन्त्रोऽयमीरितः ।

**कच्छपिः** । पुं । क्षुद्ररोगे । तालुरोगे ।

**कच्छपिका** । स्त्री । विषमुष्टी । महानिम्बे । रा.नि.व.४ । कृष्णनिर्गुण्ड्याम् । वै.निघ. । वातश्लेष्मजन्यप्रमेहपिटकानामक्षुद्ररोगविशेषे । "ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः । कफानिलाभ्यां पिड़का ज्ञेया कच्छपिका बुधैः ॥" इति निदा. । [पिकायाम् । মাদিকাছিম্ । अम. ।

**कच्छपी** । स्त्री । क्षुद्ररोगे । मे.पत्रिकं । कच्छ-

**कच्छपोलिः (का)** । स्त्री । जलवेतसे । वै. निघ. ।

**कच्छरुहा** । स्त्री । दूर्व्वायाम् । जटा. । नागरमुस्तायां । "नागरोत्थाकच्छरुहा ।" रा.नि.व.१२ ।

**कच्छा** । स्त्री । भद्रमुस्तायाम् । श्वेतदूर्व्वायाम् । चीरि(ड़ि)कायां । ঝিঁঝিঁ পোকা । वाराहीकन्दे । मे.ह्रद्विकं । [दूर्व्वा । रा.नि.व.८ ।

**कच्छान्तरुहा** । स्त्री । श्वेतदूर्व्वायाम् । শ্বেত

**कच्छारुहा** । स्त्री । स्वर्णकेतक्याम् । वै.निघ. ।

**कच्छालङ्कारकः** । पुं । काशतृणे ।

**कच्छुः (च्छूः)** । स्त्री । खर्ज्जूरोगे । চুলকোনা । तल्लक्षणं — "सूक्ष्मा बह्वाः पिड़काः स्राववत्यः पामेत्युक्ताः कण्डुमत्यः सदाहाः । सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रास्फिचोश्च ।" मा.नि. । [पापलक्षुपे । रा.नि.व.४ ।

**कच्छु(च्छू)घ्ना (घ्नी)** । स्त्री । पटोले । हवु-

**कच्छु(च्छू)मती** । स्त्री । शूकशिम्ब्यां । श्र.च. ।

**कच्छु(च्छू)रः** । त्रि । कच्छूरोगयुक्ते । খোসরোগী । पुंश्चले । मे.रत्रिकं ।

**कच्छु(च्छू)रा** । स्त्री । कपिकच्छ्वां । আলাকুশী । रा.नि.व.३ । रक्तदुरालभायां । দুরালভাবিশেষ । कर्पूरशट्याम् । आम्रहरिद्रायाम् । महाबलायाम् ।

**कच्छुरालः** । पुं । शेलुवृक्षे ।

**कच्छुरी** । स्त्री । धातक्याम् । ধাই ফুল ।

**कच्छेष्टः** । पुं । कच्छपे । रा.नि.व.१८ । स्त्री । भद्रमुस्तायाम् ।

**कच्छोत्था** । स्त्री । मुस्तायां । रा.नि.व.६ ।

**कच्छोरम्** । क्ली । शट्याम् । र.मा. ।

**कजम्** । क्ली । कमले । अमृते । मे.जद्विकं ।

**कज्जलम्** । क्ली । नीलकमले । अञ्जने । কাজল । हे.च. । त्रिका.सि.यो.कामशा.चि. । पुं । कज्जल्याम् । अत्रि. ।

**कज्जला (लिः) (लिका) (ली)** । स्त्री। औषधविशेषे। Sulphuret of mercury. (Aethiop's mineral.) मर्द्दितरसगन्धके कज्जलीति लोके। श.र.। "एषा कज्जलिकाख्याता बृंहणी वीर्य्यवर्द्धनी। नानानुपानयोगेन सर्व्वव्याधिविनाशिनी॥" वै.निघ.२भ.। "जपापत्ररसेनाथ वर्द्धमानरसेन च। रसं संशोधयेत्तेन तत्समं शोधयेद्बलिं॥ भृङ्गराजरसैः पिष्ट्वा शोधयेदर्करश्मिभिः। सप्तधा वा त्रिधा वापि पश्चाच्चूर्णञ्च कारयेत्। चूर्णयित्वा समं तेन रसेन सह मर्द्दयेत्। नष्टसूतं यदा चूर्णं भवेत्कज्जलसन्निभम्॥" भा.म.१भ.। "शुद्धसूतं गन्धकञ्च समं सम्मर्द्दयेद्दिनं। निश्चन्द्रं कज्जलीभूतं ततो योगेषु योजयेत्॥ पृथग्योगेषु यत्रोक्तौ समौ पारदगन्धकौ। तत्र भागद्वयं योज्यं कज्जलस्येति निश्चयः॥ यावान् स्यादधिकः सूतात् तावन्तं गन्धकं पुनः। क्षिपेद्योगे विधानज्ञो नात्र कार्य्या विचारणा॥ यत्र सूतोऽधिको योगे गन्धपाषाणतो भवेत्। तत्र तन्मानतः कुर्य्यादादौ[illegible] हि कज्जलं॥" भच्रि.।

**कञ्चटः (ड़ः)** । पुं, क्ली। गजपि[illegible]। वै.निघ.। जलतण्डुलीयापरनाम-स्वनाम[illegible]शाके। কাঁচড়া দাম। र.मा.। स्त्रिं चवड़ाइभेद। कलोटिवाशाके। च.द.,सि.यो.कञ्चटादिः। चौराइशाकभेदे। भा.म.१भ.अ.सा.चि.। गुणाः— धारकत्वं हिमत्वं पित्तरक्तनाशित्वं लघुत्वञ्च। राज। वातहरत्वं तिक्तत्वञ्च। भा.पु.१भ.शा.व.। कञ्चड़ा हि कञ्चटभेदे। [পাতা। रस.र.ग्रहणीकवाटरसे।

**कञ्चटपत्रकम्** । क्ली। कञ्चटच्छदे। কাঁচড়া

**कञ्चटपल्लवः** । पुं। कञ्चटे। सि.यो.ग्रह.चि. जम्बादिः।

**कञ्चटादिः** । पुं। अतिसारे कषायविशेषे। अत्र कञ्चटादीनां पत्रं ग्राह्यम्। "कञ्चटदाड़िमजम्बूशृङ्गाटकपत्रह्रीवेरं। जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात्॥" च.द.अ.सा.। কাঁচড়া পাতা, দাড়িমপাতা, জামপাতা, শিঙেড়া পাতা, বালা, মুতা, শুঁট, প্রত্যেকে ২৩ র. জল /॥• শ. শে. ৶• আদ পোয়া।

**कञ्चटावलेहः** । पुं। ग्रहण्यधिकारे—अत्र कञ्चटस्य (কাঁচড়াদাম) १ श. तालमूल्याः १ श. जलं १६ श. शे. ४ श., क्वाथे शर्करा १ श. पक्त्वा पादशिष्टे तत्र वराहक्रान्ताधातकीपाठाबिल्वपेशीपिप्पली भङ्गापत्रातिविषा यवक्षार-सौवर्च्चलरसाञ्जनमोचरसानां प्रत्येकं चूर्णं कर्षमितं दत्त्वा पाकशेषं कुर्य्यात्। शीते मधुनः कुड़वार्द्धं देयम्। च.द.। सा.वी.। কাঁচড়া ১ শ. তালমূলী ১ শ. জল ১৬ শ. শে. ৪ শ. চিনি ১ শ. পাক করত পাদশেষ হইলে তাহাতে বরাক্রান্তা, ধাইফুল, আকনাদি মূল, বেলশুঁটা, পিপুল, সিদ্ধি, আতইচ, যবক্ষার, সচল লবণ, রসাঞ্জন এবং মোচরস প্রত্যেকে চূর্ণ ২ তোলা দিয়া পাক শেষ করিবে। শীতল হইলে মধু ১ পোয়া দিবে।

**कञ्चनः** । पुं। काञ्चनवृक्षे। वै.निघ.।

**कञ्चिका** । स्त्री। वेणुशाखायां। কঞ্চি। श.च.। घुङ्स्फोटे। रा.नि.व.२०।

**कञ्चुः (कः)** । पुं। सर्पत्वचि। সাপের খোলশ। हे.च.। उष्ट्रे। चोलके। কাঁচুলি। औषधविशेषे। मे.कत्रिकं।

**कञ्चुकशाकः** । पुं। शाकविशेषे। गुणाः— "कञ्चुकीशाकवृन्दन्तु वातला ग्राहिणी मता। पुष्टिकरी कफपित्तानां नाशिनी परिकीर्त्तिता॥" वै.निघ.। [वै.निघ.।

**कञ्चुका** । स्त्री। अश्वगन्धायाम्। कञ्चुकशाके।

**कञ्चुकालुः** । पुं। सर्पे। कालसर्पे। কেউটে সাপ। श.च.।

**कञ्चुकिः** । पुं। यवे। रा.नि.व.१६।

**कञ्चुकी** । पुं। चणकवृक्षे। सर्पे। यवे। रा. नि.व.१८। जीरकवृक्षे। मे.नचतुष्कं। तन्नामकदोषान्वितघोटके। लक्षणं यथा—"स्कन्धे वक्षसि वाह्वोश्च अंसदेशे तथैव च। अन्यवर्णो भवेद्यस्तु कञ्चुकी सः प्रकीर्त्तितः॥" ज.द.१अ.। स्त्री। चौरीवृक्षे। र.मा.। কোঁচড়া। र.सा.सं.। उत, क्षीरसागर। क्षीरकञ्चुकीति रस.र.वह्निभल्लातके, महाभल्लातकगुड़े। शरपुङ्खायाम्। कञ्चुकशाके। औषधिविशेषे। मे.। [भाषा। हे.च.माला.।

**कञ्चुलिका** । स्त्री। अङ्गरक्षिकायाम्। काँचुलीति

**कञ्जः** । पुं। केशे। मे.जद्विकं। क्ली। अमृते।

पुष्पे । वै.निघ. । [काञ्जला । श.च. ।

**कञ्जकः** । पुं । पक्षिविशेषे । मयना पाखि,

**कञ्जनः (लः)** । पुं । कञ्जकपक्षिणि । श.च. ।

**कञ्जमूलम्** । क्ली । कमलकन्दे । वै.निघ. ।

**कञ्जयोनिः** । पुं । ब्रह्मणि । कञ्जस्य पद्मस्य योनिरुत्पत्तिः । श.च. ।

**कञ्जरः** । पुं । गजे । केशे । स्त्री । धातक्याम् । पाटलायाम् । उदरे । मे.रत्रिकं । [हे.च. ।

**कञ्जलिका** । स्त्री । मञ्जरविशेषां । काँचुली ।

**कञ्जारः** । पुं । जठरे । गजे । मे.रत्रिकं ।

**कञ्जिकम्** । क्ली । काञ्जिके । च.टी.भ. ।

**कञ्जिका** । स्त्री। भार्ग्यां । वामुनहाटी । श.र. ।

**कटः** । पुं । करिगण्डस्थले । किलिञ्जके । माछुर, दरमा, मरायेर बड़ । मे.टद्विकं । तृणे । धरणिः । कटिप्रदेशे । शवे । नले । समये । हे.च. । क्ली । अश्वचालनाय रचितभूमौ । ज.द.७अ. ।

**कटकः** । पुं, क्ली । सामुद्रलवणे । कड़कच रत्ना. । पारिहार्य्ये । हारा. । हस्तिदन्तमण्डने । मे.कत्रिकं ।

**कटकी** । पुं । गजे । श.र. । [त्रिका. ।

**कटकोलः** । पुं । निष्ठीवनपात्रे । पिक्‌दानि ।

**कटखदिरः** । पुं । काके । शृगाले । मे. ।

**कटखादकः** । पुं। काचलवणे । काचकलसे । बलिपुष्टे । जम्बुके । शेयाल । मे.कपञ्चकं ।

**कटङ्कटः** । पुं । अग्नौ । दारुहरिद्रायां । भैष. सु.रो.बृहत्खदिरवटी । [गाछ । द्रव्याभि. ।

**कटङ्कटा** । स्त्री । आच्छुकवृक्षे । आचकुलेर

**कटङ्कटी** । स्त्री । दारुहरिद्रायाम् । वै.निघ. ।

**कटङ्कटेरी** । स्त्री । दारुहरिद्रायाम् । प.मु. । हरिद्रायाम् । त्रिका. ।

**कटपञ्चकम्** । क्ली । अश्वचालनाय पञ्चविधभूमिषु । एका मण्डलाकारा, द्वितीया चतुरस्रा, तृतीया गोमूत्रा, चतुर्थी अर्द्धचन्द्रा, पञ्चमी नागपाशा चेति । तदुक्तं नकुलेन । "धनुरष्टादश योज्यं वाजिनां मण्डलं क्रमात् । सङ्कोचयेज्जवं यावदाव-कटपञ्चकम । तदूर्द्ध मण्डली योज्या गोमूत्रा तदनन्तरम् । ऋजुवर्त्मसु वर्त्तौ च गोमूत्रा सर्व्वकर्मसु । युज्यमाना न हस्यन्ते प्रायशो हि विचक्षणैः ।" ज.द.७अ. ।

**कटप्रोथः** । पुं । स्फिचि । कट्याम् । श.चि. ।

**कटभङ्गः** । पुं । हस्तेन शस्यच्छेदे । हारा. । हाते शस्य तोला । नृपात्यां । त्रिका. ।

**कटभिः (भी)** । स्त्री । कण्टकशिरीषे । काँटाशिरीष । रत्ना. श्वेतापराजिते । श्वेत अपराजिता । प.मु. । लघुज्योतिष्मतीलतायाम् । लताफट्‌की । रा.नि.व.३,२३ । वै.निघ.२भ.उन्मा. चि.निम्बादिघृते । मुषल्यां । तालमूली । रा.नि. व.२३ । अपराजितायाम् । अप.चि.स्मृतिसागररसे । किंशालीत्यपरनामधेयवृक्षविशेषे । सा द्विविधा कृष्णश्वेतभेदेन । तयोः श्वेता पुनः महाक्षुद्रभेदेन द्विविधा । कृष्णायाः गुणाः— कटूष्णा गुल्मघ्नी विषाध्मानशूलघ्नी वातकफाजीर्णहरी च । श्वेता ततः अधिकगुणयुक्ता । रा.नि.व.९ । "कटभी कटुका चोष्णा तुवरा तिक्तका मता । नाडीव्रणं रक्तकर्जं प्रमेहञ्च विषं कृमीन् । श्वित्रकुष्ठं कफञ्चैव चिदोषञ्च व्रणन्तथा । शिरोरोगमजीर्णञ्च नाशयेदिति कीर्त्तिता । फलञ्चास्या धातुवृद्धिकरं कफवर्द्धकञ्च । "निर्यासोऽस्या गुरुर्वृष्यो बल्यो वातविनाशनः ।" इति महाश्वेतकटभी-तत्फलनिर्यासगुणाः । "क्षुद्रा च कटभी चोष्णा कटुका कुष्ठहा मता । कफहा रक्तदोषघ्नी मेदोरोगहरा परा । नाडीव्रणं विषं मेहं कृमींश्चैव विनाशयेत् । कटभीवत्फलगुणा ज्ञेयाः···।" क्षुद्रकटभीगुणाः । वै.निघ. । [चि. ।

**कटभीत्वक्** । स्त्री। कटभीवल्कले। च.द.उन्मा.

**कटमालिनी** । स्त्री । मदिरायाम् । श.च. ।

**कटम्व(म्भ)रा (टुम्भरा)** । स्त्री । कटुक्यां। कट्‌की । मे. । र.मा.भा.पू.१भ.गु.व. । कटभी भद्राली च । सि.यो.उन्मा.चि.श्रीकण्ठः । "कटम्भरा द्रविकाली ।" गन्धप्रसारण्यां । गन्धभादुलि। हस्तिवृक्षे । गोधायां। बध्वां । हारा.। श्योणाकवृक्षे। भा.पू.१भ.चने. । करिण्याम् । कलम्बिकायां । मूर्व्वायां । पुनर्णवायां । मे.रचतुष्कं । राजबलायां । भम. । महाबलायाम् । रा.नि.व.४ ।

**कटम्भरः** । पुं । श्योणाकवृक्षे । रा.नि.व.९ । कटभीवृक्षे । वै.निघ. ।

**कटशर्करा** । स्त्री । गाङ्गेरुकलतायाम् । नटी इति गौड़े । द्वारा. । ओषधिविशेषे ।

**कटसारिका** स्त्री । झिण्टीसामान्ये । झाँटी इ कटसरैया । भा.पू.१भ. ।

**कटाकुः** । पुं । पक्षिविशेषे । उणा. ।

**कटायनम्** । क्ली । वीरणे । বেণা । श.च. ।

**कटाहः** । पुं । कूर्मकर्परे । मे.हत्रिकं । जायमानविषाणाग्रभागे महिषशिशौ । द्वारा. । तैलपाकपात्रे । কড়া । श.च. । सूपे । त्रिका. ।

**कटाहकः** । पुं । मातुलुङ्गादिरम्यतरस्याम्लवर्गे । অাতি । चवि.सू.१७अ. । [रा.नि.व.१० ।

**कटाह्वयम्** । क्ली । पद्मकन्दे । পদ্মের গেঁড়ো ।

**कटाक्षः** । अपाङ्गदृष्टौ । अम. । चक्षुस्त्र्यङ्गकर्णयोरन्तरभागे । ज.द.२अ. ।

**कटिः** । पुं, स्त्री । श्रोण्याम् । কাঁকাল । रा.नि.व.१८ । कलत्रे । कायाम् । कटौरे । हे.च. ।

**कटितटम्** । क्ली । नितम्बे ।

**कटित्रम्** । क्ली । रसनायाम् । मे.रत्रिकं ।

**कटिदेशः** । पुं । कठ्याम् । কাঁকাল ।

**कटि(टी)प्रोथः** । पुं । स्फिचि । रा.नि.व.१८ । कटिदेशस्थमांसपिण्डे । পোঁদের পেলো । अम. । [भा. ।

**कटिरोहकः** । पुं । करिपश्चाद्भागारोहके । श.

**कटिल्लम्** । क्ली । कारवेल्लफले । भा.पू.१भ. ।

**कटिल्लकः** । पुं । कारवेल्लके । করলা । प.मु. । रक्तपुनर्नवायाम् । मे.कचतुष्कं । [हला. ।

**कटिशीर्षकः** । पुं । कटिदेशे । কাঁকাল ।

**कटिशूलः** । पुं । कटिदेशस्थे शूलरोगे । कुम्री इति भाषा । [মেরের ঘুঁঘুর । द्वारा. ।

**कटिशृङ्खला** । स्त्री । कटिकिङ्किण्याम् । কো-

**कटी (इन्)** । पुं । हस्तिनि । खदिरवृक्षे । रा.नि.व.८ । स्त्री । श्रोणिफलके । কাঁকাল । अम. । पिप्पल्याम् । मे.टत्रिकं । स्फिक्प्रदेशे । रत्ना. ।

**कटीकतरुणम्** । क्ली । नितम्बगर्त्तसन्धिमर्म्मणि । तत्स्थानं पृष्ठदण्डोभयतः जघनपार्श्वबहिर्भागे ईषन्नीचैः । पृष्ठवंशोभयतः प्रतिश्रोणीकाण्डं चक्षिनी । अम. । सु.शा.६अ. ।

**कटीकपालम्** । क्ली । कटीफलके । त्रिका.ए. ।

**कटीग्रहः** । पुं । कटीगतवातरोगे । কোমরের বাত । लक्षणं—"वायुः कट्याश्रितः सक्थ्नः सामी वा जनयेद्रुजम् । कटिग्रहः स एवोक्तः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥" भा.म.१भ. ।

**कटीरः** । पुं, क्ली । जघनस्थले । जटा. । कटिदेशे । কাঁকাল । हे.च. । कटिपार्श्वे । भ.टी. ।

**कटीरकः** । नितम्बस्थले । रा.नि.व.१८ ।

**कटुः** । स्त्री । लतायाम् । राजिकायाम् । मे.टद्विकं । कटुकायाम् । কট্‌কী । रा.नि.व.६ । कटुवल्ल्यां । লতাবিশেষ । रा.नि.व.३ । प्रियङ्गुवृक्षे । हे.च. । पुं । कटुपटोले । তিৎপলতা । वै.निघ.२भ.उन्मा.चि. । चम्पकवृक्षे । अर्कवृक्षे । श.च. । जलजतृणविशेषे । कुचकविषे । ছাতারিবিষ । श.र. । कुटजतरौ । राजसर्षपे । द्वारा. । चीनकर्पूरे । रा.नि.व.१२ । वायुग्निगुणभूयिष्ठे षड्रसान्यतमरसे । ঝালরস । मं तिखट् । स मरिचादौ व्यक्तः । रा.नि.व.२० । तस्य लक्षणं —"यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाश्च स्रावयति स कटुकः ।" सु.सू.४२अ. । अपि च "संवेदयेद्यो रसनां निपाते तुदतीव च । विदहन्मुखनासाक्षि संस्रावः स कटुः स्मृतः ॥" चर.। गुणाः—उष्णलघुरूक्षः सुखशोधनः प्राणाक्षिविरेचनः क्रमिहरश्च । तद्विपाकोऽपि कटुः, तद्विपाकगुणाश्च वातला कफपित्तघ्ना वायुग्निगुणभूयिष्टाश्च । सु.सू.४२अ. । कफकण्ठदोषशोफमन्दानिलश्चित्ररोगघ्नः। अतिसेवितश्चेत् चयवीर्य्यबलक्षयञ्च करोति । रा.नि.व.२० । कटुकषाय तीक्ष्णाश्च विशदो वातपित्तकृत् श्लेष्मकृल्लघुरोगेयः क्रमिकण्डूविषापहः । रुक्षत्वन्यहरश्चापि मेदःस्थौल्यापकर्षणः । अमुदो नासिकास्याक्षिजिह्वार्य्यविजको मतः । दीपनः पाचनो रुच्यः नासिकाशोषणो भ्रमम् । क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषण इति मतान्तरम् । सोऽतियुक्तो भ्रान्तिदाहमुखताल्वौष्ठशोषकृत्... ॥" भा.म.१भ. । त्रि । कटुनि, तिक्तरसे । रत्ना. । सुगन्धे । मे. । दुर्गन्धे । तीक्ष्णे । भ.टी.स्वा. ।

**कटुकः** । पुं । तन्नामकरक्तपाके । सु.सू.४०अ. ।

कटुरसे। कटुपटोले। वै.निघ.२भ.ज्व.चि.कटुफलादौ। सुगन्धतृणे। श.र.। कुटजवृक्षे। अर्कवृक्षे। श.च.। आर्द्रके। राजसर्षपे। हारा.। लशुने। मे.। क्ली। त्रिकटौ। मे.कत्रिकं। मरिचे। रा.नि.व.६। भा.म.१भ.कण्ठकुब्ज.स.ज्व.चि.। "कटुकट्फलाम्भोधरैः।" कटुक्याम्। च.द.कफज्व.चि.। "कटुकं चित्रकं निम्बम्।"

**कटुकण्टकः**। शाल्मलीवृक्षे। रा.नि.व.८।

**कटुकत्रयम्**। क्ली। त्रिकटौ। च.द.ज्व.चि. कवलधारणे। "सैन्धवं कटुकत्रयम्।"

**कटुकन्दः**। पुं। शिग्रुवृक्षे। সজিনা গাছ। आर्द्रके। আদা। लशुने। मे.दचतुष्कं। क्ली। मूलके। মূলা। प.मु.।

**कटुकन्दरी**। स्त्री। गोविन्दीति कोङ्कणे प्रसिद्धा। प्रा. वाघंवी। गुणाः—"कटुकन्दरिका चोष्णा तिक्ता वातकफापहा। विसूच्यादीन्नाशयति।" वै.निघ.।

**कटुकफलम्**। क्ली। कक्कोलके। কাকোল। रा.नि.व.१२। वै.निघ.२भ.वा.व्या.। महाराम्नादौ।

**कटुकरसः**। पुं। षड्रसान्यतमरसविशेषे। ঝালরস। See कटुः।

**कटुकरोहिणी**। स्त्री। कटुक्याम्। কট্‌কী। वा.चि.१भ.। पटोलादौ। "पथ्यं कटुकरोहिणी।" च.द.ज्व.चि.मुस्तादिगणे। "बलाकटुकरोहिणी।"

**कटुकवर्गः**। पुं। कटुकद्रव्यसमूहे। यथा—शिग्रुमधुशिग्रुमूलकलशुनसुमुखासितशिफकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्तलाङ्गलिकाशुकनासापीलुप्रभृतीनि पिप्पल्यादिगणः सालसारादिगणः सुरसादिगणश्चेति। সজিনা, রক্তসজিনা, মূলা, রশুন, শ্বেততুলসী, মোরা, কুড়, দেবদারু, রেণুক, সোমরাজীবীজ, শঙ্খপুষ্পী, গুগ্‌গুল, মুতা, বিষলাঙ্গুলিয়া, শোণাপাত এবং পীলু প্রভৃতিকে পিপ্পল্যাদি (পিপুল, পিপুলমূল, চই, চিত্রকমূল, শুঁট, মরিচ, গজপিপ্পলী, রেণুক, এলা, যমানী, ইন্দ্রযব, আকনাদি, জীরক, সর্ষপ, ঘোড়ানিম, মদনফল, হিঙ্গু, বামুনহাটী, মূর্গামূল, আতইচ, বচ, বিড়ঙ্গ এবং কট্‌কী), সুরসাদি (তুলসী, শ্বেত তুলসী, গন্ধপলাশ, বাবুইতুলসী, গন্ধতৃণ, মহাগন্ধতৃণ, রাইসরিষা, বনবাবুই, কাসমর্দ্দ, হেঁচেতা, বনতুলসী, বিড়ঙ্গ, কট্‌ফল, শ্বেতনিশিন্দা, নীলনিশিন্দা, কুকুরশোঁকা, ইন্দুরকাণী পানা, বামুনহাটী, কেউয়াবুঁটী, গুড়কাঁউলী, ঘোড়ানিম্) ও শালসারাদিগণকে (শাল, পিয়াশাল, খদির, শ্বেতখদির, বিট্‌খদির, শুপারি, ভূর্জপত্র, মেষশৃঙ্গী, তিন্দুক, চন্দন, রক্তচন্দন, শিশু, শিরীষ, বক, ধব, অর্জ্জুন, তাল, শেগুন, করঞ্জ, নাটাকরঞ্জ, কৃষ্ণাগুরু, অগুরু, লতাশাল) কটুকবর্গ কহে। सु.सू.४२अ.।

**कटुकवल्ली**। स्त्री। कटुनामलताविशेषे। कटुका। तें रैमहु। गुणाः—कटुः शीता कफश्वासघ्नी नानाज्वरहरा रुच्या राजयक्ष्मघ्नी। रा.नि.व.३।

**कटुकशर्करा**। स्त्री। पित्तश्लेष्मज्वरे कटुरोहिणीशर्करायोगे। अत्र प्रत्येकं तोलकमितं। वैद्यप्रसारके कु.टी.। चक्रस्तु कटुरोहिण्या १२ मा. सितायाश्च ४ मा.।

**कटुकस्नेहः**। पुं। सर्षपवृक्षे। वै.निघ.।

**कटुका(की)**। स्त्री। (Picrorrhiza kurroa.) कटुक्याम्। কট্‌কী। हिं कुटकी। तें नल्लकोलकर। केदारकटुकीति दाक्षिणात्ये प्रसिद्धा। रा.नि.व.६। "कटुकामुष्णवारिणा।" च.द. पित्तश्लेष्मज्व.चि.। "सितां कटुकया युक्तां पीत्वा चोष्णेन वारिणा।" आयुर्व्वेदसारे। गुणाः—सारकरूक्षकफघ्नी। राज.। तिक्तातिकटुः शीता पित्तरक्तदाहबलासारोचकघ्नी च। वा.। श्वासज्वरभेदनी (अर्थात्) बद्धमबद्धं वा मलपिण्डितं मलादिकं भित्त्वाधः पातयति। चक्र.द.। कटुः तिक्ता रूक्षा शीता लघुः भेदका दीपनी हृदयग्राही कफपित्तज्वरप्रमेहश्वासकासरक्तदाहकुष्ठकृमिघ्नी च। भा.पू.१भ.ह.व.। कटुतुम्ब्याम्। তিৎলাউ। क्षुद्रचुञ्चुक्षुपे। रा.नि.व.२४। पीतरोहिण्यां। नेपपालाख इति लोके। रत्ना.। लताकस्तूर्याम्। च. द.वा.व्या.चि.।

**कटुकाख्या**। स्त्री। कटुक्याम्। सु.।

**कटुकाद्यलौहम्**। क्ली। शोथाधिकारे

पाठः—"कटुकं चूषणं दन्ती विडङ्गं त्रिफला तथा। चित्रको देवदारुश्च त्रिवृद्वारणपिप्पली॥ चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयोरजः। क्षीरेण तु-ल्यमेतच्च शैलं श्वयथुनाशनं॥ भैष.रस.र.शोथ.चि.। ত্রিকটু, কটকী, দন্তীমূল, বিড়ঙ্গ, ত্রিফলা, চিতারমূল. দেবদারু, তেউড়ীমূল, গজপিপুল সমান ভাগ। সর্ব্বদ্বিগুণ লৌহচূর্ণ।

**कटुकापाली** । स्त्री। कण्टकपालीवृक्षे। কাঁটাগুড়কাঁডিলী। रत्ना.। प.मु.।

**कटुकारोहिणी** । स्त्री। कटुकायां। रा.नि.व. ६। च.द.पित्त.ज्व.चि.मृद्वीकादौ। "कटुकारोहिणी समा।" [लाउ। र.मा.।

**कटुकालाबुः** । पुं। तिक्ततुम्ब्याम्। তিৎ-

**कटुकीटः (कः)** । पुं। मशके। মশা। जटा.।

**कटुकाणः** । पुं। टिट्टिभे। তিতির পাখী। रै.च.।

**कटुग्रन्थि** । क्ली। पिप्पलीमूले। शुण्ठ्याम्। रा.नि.व.६। लशुने। वै.निघ.। [द्वारा.।

**कटुङ्गता** । स्त्री। नित्यकर्म्मसमाचारनिष्ठुरत्वे।

**कटुचातुर्जातकम्** । क्ली। समभागत्वगेला-पत्रमरिचेषु। "एलात्वक्पत्रकैस्तुल्यैर्मरिचेन समन्वितैः। कटुपूर्व्वमिदञ्चान्याच्चातुर्जातकमुच्यते॥" रा.नि.व.२२। [र्जके। गन्धतुलसी। वै.निघ.।

**कटुच्छदः** । पुं। तगरवृक्षे। श.र.। सुगन्धा

**कटुजीरकः** । पुं। जीरके। रा.नि.व.५।

**कटुता (त्वम्)** । स्त्री, क्ली। तीक्ष्णतायाम्। ঝাল। दौर्गन्ध्ये।

**कटुतिक्तः (कः)** । पुं। किराततिक्तके। চিরেতা। भा.पू.१भ.। महाशणवृक्षे। বড় শণ। शणक्षुपे। रा.नि.व.४।

**कटुत्रिक्त(क्ति)का** । स्त्री। महाशणे। प.मु.। कटुतुम्ब्याम्। তিৎলাউ। श.र.।

**कटुतिक्ता** । स्त्री। कटुतुम्ब्यां। তিৎলাউ। कटुतुम्ब्याम्। কটুতরুই বা তিৎপল্‌তা। रा.नि.व.३। [श.च.।

**कटुतिन्दुकः** । पुं। कुचेलके। কুঁচিলা।

**कटुतुण्डिका (ण्डी)** । स्त्री। तिक्ततुम्ब्यां। কটুতরাই, তিৎপলতা, তেতকুন্দুরুকী। मं कं कडुतोंडली, कडितोंडे, तीतकुंदरु, बनटिंडुराकडुआ। गुणाः—कटुः तिक्ता कफवान्ति-विषघ्नी अरोचककफपित्तघ्नी रोचनी च। रा.नि. व.३। बिम्ब्याम्। তেলাকুচা।

**कटुतुम्बि(म्बी)का** । स्त्री। Wild variety of lagenaria vulgaris. तिक्तालाब्वाम्। তিৎলাউ। हिं कडुटुभिया, तुम्बी, तीतलौकी। मं कं कडुभोंपला,कडुदुधी, कडिसोरे। तें चेतिआनब। गुणाः - पाण्डुकृमिकफवातनाशित्वं लघुपाकित्वञ्च। राज.। "कटुतुम्बी रसे पाके कटुर्वृद्धा च शीतला। तिक्ता वान्तिकरी श्वासकासहृच्छोधनी मता। वातशोफव्रणविषशूलपित्तज्वरापहा। पक्वं पाके तु मधुरं मूत्रशोधनमुत्तमम्। पित्तशान्तिकरं ज्ञेयं फले पर्णसमा गुणाः॥" वै.निघ.। [व.३।

**कटुतुम्बिनी** । स्त्री। तिक्तालाब्वां। रा.नि.

**कटुतैलम्** । क्ली। सार्षपतैले। সরিষার তৈল। हिं कडुयातेल।मं शिरशेल। गुणाः—"कटु तिक्तं तथा ग्राहि उष्णं स्यात्कफवातनुत्। कृमिपाण्डुशोधनं स्यात्पित्तकृत्सार्षपं स्मृतम्। कर्णरोगे कृमिरोगे तथा वातामयेषु च। कण्डूकुष्ठामये चैव कफमेदोगुणेषु च। प्रशस्तं सार्षपञ्चैव रोगाणाञ्च विभावयेत्। वस्तिकर्म्मणि नो शस्तं पित्तदाहकरं महत्।" अत्रि.सू.१४अ.। कटूष्णं तीक्ष्णं लघु कफशुक्रानिलहरं पित्तास्रकोठकुष्ठार्शोव्रणजन्तुजिच्च। वा.टी.हेमा.तैलव.। "सार्षपं तिक्तकटूष्णं वातकफविकारघ्नम्। पित्तास्रदोषदं कृमिकुष्ठघ्नं तिलजवच्च चक्षुष्यम्॥" रा नि.व.१५।

**कटुतैलमूर्च्छा** । स्त्री। सफेनतामतादिदोषनाशार्थमामतैलस्य पाकेन निष्फेनीकृतस्यावतार्य्य सजलहरिद्रादिवारिप्रक्षेपेण शनैः शनैः शीतलीकरणे। तेन पाककाले स्नेहात्याद्युपद्रवो न जायते। मूर्च्छाद्रव्याणि यथा—आमलकी हरिद्रा मुस्ता बिल्वत्वक् दाड़िमत्वक् नागकेशरं कृष्णजीरकं बालकं नलुका बिभीतकञ्च। "वयस्था रजनीमुस्तबिल्वदाड़िमकेशरैः। कृष्णजीरकह्रीवेरनलिकैः सबिभीतकैः॥ एतैः समांशैः प्रस्थे च कर्षमात्रं प्रयोजयेत्। अक्षयाविपलं तत्र तोयमाढ़कसम्मितम्। कटुतैलं पचेत्तेन आमदोषहरं परम्॥" भैष.ज्व.

वि.। তৈল ৪ শ. পাক করিয়া নিষ্ফেন হইলে, নামাইয়া অগ্রে মঙ্গলহরিদ্রা তাহার পর মঙ্গলমঞ্জিষ্ঠা তৎপরে অন্যান্য দ্রব্য ক্রমে ক্রমে প্রক্ষেপ দ্বারা উক্ত তৈলকে শনৈঃ শনৈঃ শীতল করিবে। পরে ১৬শ. জলে পাক করিবে। মঞ্জিষ্ঠা ২প. ও অন্যান্য দ্রব্য প্রত্যেকে ২ তো. দিবে।

**कटुत्रय(त्रिक)म्** । क्ली । त्रिकटुके । শুঁট, পিপুল, মরিচ। रा.नि.व.२२ । भा. ।

**कटुदला** । स्त्री । कर्कटिकायाम् । কাঁকুড় । रा.नि.व.७ ।

**कटुदुग्धिका** । स्त्री । तिक्तालाम्बां । वै.निघ.।

**कटुनिष्पाव:** । पुं। नदीनिष्पावधान्ये । श्र.च.।

**कटुपत्र: (क:)** । पुं । पर्पटे । ক্ষেৎপাবড়া। सितार्जके । শ্বেতপত্র ক্ষুদ্রতুলসী । रा.नि.व.५।

**कटुपत्रिका (त्री)** । स्त्री । लघुक्षुपे । क्षारीवृक्षे । रा.नि.व.८ ।

**कटुपर्णिका (र्णी)** । स्त्री। चीरिण्यां । यन्मूलं चोक् इति उच्यते । "कटुपर्णी हैमवती हेमक्षीरी हिमावती । हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते । गुणा:—हेमाह्वा रेचनी तिक्ता भेदिन्युत्क्लेशकारिणी । कृमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत् ॥" भा.म.१भ. ।

**कटुफल:** । पुं । पटोले । रा.नि.व.३ । कर्कोटवृक्षे ।[illegible]कर्कटिकायाम् । कारवेल्लके । क्ली । इन्द्रयवे । वै.निघ.२भ.वा.व्या. ।

**कटुफला** । स्त्री । श्रीवल्लीकण्टकवृक्षे । तिक्तालाम्बाम् । रा.नि.व.३ । वृहत्यां । कण्टकार्य्याम् । चिर्भ्भटके ।

**कटुभङ्ग:** । पुं । शुण्ठ्याम् । त्रिका. ।

**कटुभद्रम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ । आर्द्रके । भा.पू.१भ. ।

**कटुमञ्जरिक: (का)** । पुं, स्त्री । रक्तापामार्गे । শ্বেত আপাং। रा.नि.व.४ ।

**कटुमूलम्** । क्ली । पिप्पलीमूले । रा.नि.व.६ ।

**कटुमोदम्** । क्ली । गन्धराजे। থাটাসী । रा. नि.व.१२ ।

**कटुम्भरा** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া। च.द.वा.व्या.एकादशशतिकप्रसारणीतैले ।

**कटुरम्** । क्ली । तक्रे । ঘোল । जटा. ।

**कटुरव:** । पुं । भेके । रा.नि.व.१९ ।

**कटुरा** । स्त्री। आर्द्रहरिद्रायां । কাঁচা হরিদ্রা।

**कटुरुणा** । स्त्री । चित्रलतायां । रत्ना. ।

**कटुरोहिणी** । स्त्री । कटुकाम् । र.मा. । रा.नि.व.६। वा.सू.१५अ.पटोलादि: । च.द.पित्तज्व.चि.दुरालभादि: । "भूनिम्बवासा कटुरोहिणीनाम् ।" च.द.कफज्व.चि.मुस्तादि: । "त्रिफला कटुरोहिणी ।" अष्टाङ्गावलेहकषाये । "पटोलं कटुरोहिणी ।" च.द.ज्व.चि.शठ्यादि: ।

**कटुलता** । स्त्री । कटुकाम् । কট্‌কী । भैष.।

**कटुवार्त्ताकी** । स्त्री । तिक्तवार्त्ताक्यां । তেতবেগুন । श्वेतकण्टकार्य्याम् । रा.नि.व.४। (किनी) । क्षुद्रवृहत्याम् । वै.निघ. ।

**कटुवाष्पिका** । स्त्री । महाराष्ट्र्याम् । प.मु. ।

**कटुविपाक:** । पुं । द्रव्यस्य पाककटुत्वे । तदाश्रयश्च कटुतिक्तकषायरसद्रव्यमात्रम् । कटुविपाकं वस्तु लघु वातलं शुक्रघ्नं कफपित्तघ्नञ्च । सु. सू.४०अ. ।

**कटुवीजा** । स्त्री । पिप्पल्यां । रा.नि.व.६ ।

**कटुवीरा** । स्त्री। (Capcici.) Capcicum. कुमरिचे । লঙ্কামরিচ, গাছমরিচ,ঝাল গাছ । हिं लालमरिच । गुणा:—"कटुवीराग्निजननी दाहिनी बलासघ्नी पजीर्णविसूचीश्वयथुक्लेदघ्नी तन्द्रामोहप्रलापस्वरभङ्गारोचकघ्नी । सन्निपातजडीभूतं हृतेन्द्रियञ्च नरं जीवयति ।" पचि. ।

**कटुशृङ्गाट(ल)म्** । क्ली । चित्रकूटदेशप्रसिद्धगौरसुवर्णशाके । रा.नि.व.७ ।

**कटुस्नेह:** । पुं । (Sinapis dechotoma.) सर्षपवृक्षे । त्रिका. । कटुतैले । भैष.वाय.चि. । गौरसर्षपे । रा.नि.व.७ । [नि.व.७ । कर्कोट्याम् ।

**कटुतुम्बी** । स्त्री । कारवेल्ले। উচ্ছে গাছ । रा.

**कटूत्कट(क)म्** । क्ली । शुण्ठ्याम् । आर्द्रके । आद्र । र.मा. ।

**कटूदरी** । स्त्री । गोविन्दीति कोङ्कणे ख्याते- क्षुपे । गुणाः—विसूचीघ्नी कटूष्णा कफवातहा । वै.निघ. ।

**कटूषणम् (णा)** । क्ली,स्त्री । पिप्पलीमूले । शुण्ठ्याम् । रा.नि.व.६ । पिप्पल्यां । वै.निघ. ।

**कटोरम्** । क्ली । मृत्पात्रे । कटरा । श.च. ।

**कटोरा** । स्त्री । स्वनामख्यातपात्रे । टाटी, कटरा । श.च. ।

**कटोलः** । पुं । कटुरसे । उणा. ।

**कट्फरतैलम्** । क्ली । ज्वरे विदाहे च हितम् । मूर्च्छिततिलतैलं ४श. कल्कद्रव्याणि समस्तानि १ श. तक्रं २४ श. यथाविधि पाच्यम् । सचलवणं शुण्ठी कुष्ठं मूर्वामूलं लाक्षा हरिद्रा मञ्जिष्ठा चेति द्रव्याणि । "सुवर्चिका नागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः । तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुच्च ।" वै.निघ. ।

**कट्तृणम्** । क्ली । गन्धतृणे । सि.यो.वा.व्या.चि.माषबलादिः । सुगन्धरोहिषतृणे । रामकर्पूर । वा.उ.३९ष. । See कत्तृणम् ।

**कट्फलः** । पुं । (Myrica sapida.) स्वनामख्यातवृक्षे । कटफल, कटछाल । हिं कायफर । मं कं कायफल, किरुसिवङ्गि । तें पापरवुडुम । प.मु. । र.मा. । गुणाः—कटुः उष्णः कासश्वासज्वरघ्न क्षयदाहहरः रुच्यः मुखरोगाशान्तिकरश्च । रा.नि.व.९ । सु.सू.३८ष.लोध्रादि.ड. । सु.सू.३८सुरसादौ.ड. । वार्त्ताकवृक्षे । वै.निघ. । क्ली । कट्फले । गुणाः—तुवरं तिक्तं कटु वातकफज्वरघ्नं श्वासार्शःप्रमेहकासकण्ठामयारुचिघ्नञ्च । भा. । मद.व.१ । सि.यो.कफज्वरावलेहे । वा.सू.१५ष. । परूषकादौ पठ्यः । "कट्फलं कतकाफलम् ।" वा.सू.१५ष. रोध्रादि.पठ्यः । "जिङ्गिनीसरलकट्फलयुक्ताः ।" वा.सू.१५ष.सुरसादिः । "खरबुसहषकर्यौ कट्फलं कासमर्दः ।" च.द.पित्त.ज्व.कलिङ्गादिः । "कलिङ्ग कट्फलं मुस्तम् ।" कङ्कोले । रा.नि.व.१२ ।

**कट्फला** । स्त्री । गाम्भारीवृक्षे । र.मा. । रा.नि.व.९ । वृहत्यां । काकमाच्याम् । वार्त्ताक्यां । रा.नि.व.४ । देवदाल्यां । देयाताड़ा । रा.नि.व.३ । कुम्भेर्व्वारुके । रा.नि.व.७ ।

**कट्फलादिः** । पुं । कासरोगे कषायविशेषे । पाठः—"कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया । शृङ्गी पर्पटकं शुण्ठी सुराह्वञ्च जले शृतं । मधुहिङ्गुयुतं पेयम्... ॥" अत्र प्रक्षेप्यहिङ्गुमधुनोर्मानः । उत्तमादौ पलांशादिकं देयम् । माषिकं हिङ्गुसिन्धूत्थमित्यादि परिभाषावचनात् । च.द.कास.चि. ।

**कट्फलादिपानम्** । क्ली । दीर्घकालानुबन्धिज्वरे । गुणाः—त्रिदोषदाहतृष्णाघ्नम् । कट्फलं त्रिफला देवदारु रक्तचन्दनं परूषकफलं (फलसा) कटुकी पद्मकाष्ठं उशीरञ्चेति द्रव्याणि एषां प्र.१६ रक्तिकं वारि २श शे. १ श. । भा.म.१भ.ज्व.चि. ।

**कट्वङ्गः** । पुं । तिन्दुकवृक्षे । तेंद गाछ । वा.टी.वत्सकादिगणे.हेमाद्रिः । श्योणाकवृक्षे । शोणापाता । रा.नि.व.९ । भैष.स्त्रीरो.पुष्यानुगचूर्णे । च.सू.४अ.२१दशके । वै.निघ.अप.चि.कटभ्यादितैले । वा.सू.३५ष.अम्बष्ठादौ । "कट्वङ्गः कमलोद्भवं रजः ।" सु.सू.३८अम्बष्ठादिः । क्ली । टुण्टुकफले । शोणा फल । "कट्वङ्गफलाजमोद... ।"

**कट्वम्बरा** । स्त्री । प्रसारण्याम् । ज.द. ।

**कट्वरम्** । क्ली । Butter-milk. दधिकेरिका. । दधिसरे । र.मा. । तक्रे । 'तक्रं कट्वरमिष्यते ।' प.प्र.१ख. । व्यञ्जने । उणा. ।

**कट्वरतैलम्** । क्ली । See कट्फरतैलम् ।

**कट्वी** । स्त्री । कटुक्यां । कट्की । रा.नि.व.६ । वै.निघ.२भ.कण्ठकुष्ठज्व.चि. । भैष.कुष्ठ.चि.भल्लातकगुड़े । सु.सू.४०ष. । कटुकवल्लर्यां । कटुकीलताविशेष । रा.नि.व.३ ।

**कठरः** । त्रि । कठिने । जटा. ।

**कठा** । स्त्री । करिण्याम् । श.च. ।

**कठाकुः** । पुं । पक्षिणि ।

**कठाहकः** । पुं । A gallinule. दात्यूहपक्षिणि । श.र. । [वै.निघ. ।

**कठिका** । स्त्री । तुलसीवृक्षे । खटिकायाम् ।

**कठिञ्जरः** । पुं । (Ocymum sanctum.) अर्जकवृक्षे । कृष्णतुलसी वृक्ष । रा.नि.व.१० । पर्णासे । काल तुलसी । भा.पू.१भ.पु.व. ।

